## 20. सर्वे जन्तव ईश्वररूपिणः

"सर्वान् जन्तून् पदार्थांश्च । निश्चित्येश्वररूपिणः ।
प्रणम्यन्ता" मिति च्छात्र । बृन्दं गुरुरुपादिशत् ॥ 1

आहर्तुं समिधः कश्चि । च्छात्रो यावद्वनेऽटति ।
तावच्छ्रुत "मपेत ! द्रा । ग्गजो मत्तोऽभिधावति" ॥ 2

इत्याकर्ण्य वचः सर्वे । विना छात्रेण केवलम् ।
मत्वा तं मूर्तिमन्मृत्युम् । जङ्घाबलमुपाश्रयन् ॥ 3

अभिधावन्तं करिणम् । परमेश्वरमेव निश्चित्य ।
छात्रः प्राञ्जलिरस्तौत् । "सहस्रशीर्षा पुरुष" इति महोच्चैः॥ 4

"रे ! रे ! अपेहि ! दूरा । दपैह्यथमकालमृत्युरायाति" ।
इति घोषितमपि शतशो । हस्तिपकेन, स्थितोऽयमवगणयन् 5

उपधाव्य मदेभेन । तुण्डाग्रेण समुद्धृतः ।
दूरोत्क्षिप्तो भग्नशल्योऽ । पतच्छात्रः शिलातले ॥ 6

तदवस्थममुं श्रुत्वा । सर्वे सब्रह्मचारिणः ।
तत्रागत्य सहाचार्याः । शोचन्त स्त मुपाचरन् ॥ 7

आचार्य आह "भद्र! हस्तिपककृतापसारणोऽपि भवान् ।
नापसृतः कुत ? इय म । द्यापतिता दुर्विपत्त्वयानीता" ॥ 8

श्रुत्वेदमाह शिष्यो । "भवद्वचः सर्वजन्तु रीश इति ।
कृत्वा प्रमाणकं धिक्! । हतोऽस्मि तुन्दिल इवापगामध्ये"॥ 9

आकर्ण्य गुरुः प्राह । "यथा करी निश्चित स्त्वयेश इति ।
हस्तिपकोऽपि तथैव । निश्चेयोऽ स्त्येव रे ! मूर्ख !" ॥ 10

## द्वितीयो भागः

## 1. एकलव्यम्

### 1

आजानुबाहु युगल । ओजस्तेजस्समुद्भमत्कायः ।
उज्ज्वलकपाटवक्षा । यात्येको मूर्तिमद्वीर्यम् ॥ 1

करयोश्शरा, श्शरास, । स्तूणीरं पृष्ठके, गलेऽविरले ।
गुञ्जासरा, श्चकाशे । कट्यां हरिणाजिनाम्बरं यस्य ॥ 2

आगत्यायं भक्त्याऽ । चार्यद्रोणस्य पादयोः पतितः ।
अवद "दहमेकलव्यो । हिरण्यधन्वाख्य वनचरेन्द्रसुतः ॥ 3

धनुर्विद्याऽध्यापिता मे । तातपादै; मयाऽधुना ।
विद्यानिष्णातामाप्तुम् । प्राचार्यः प्रविचीयते ॥ 4

धनुराचार्यैः सर्वै । र्भवान् स्तुत श्चापवेदनिष्णातः ।
प्राप्तव्य इत्यवोच । न्नाशंसे शम्यतेऽत्र तृष्णेति ॥ 5

आचार्यदेव ! भवद्वा । ज्ञप्तः पितृशिक्षितां धनुर्विद्याम् ।
इच्छामि दर्शयितु" मिति । ब्रुवाण मुत्थाप्य तं गुरु रगादीत् ॥ 6

"अयि ! बाल ! व्यपदिशसि । किरात इति; वेदवद्धनुर्वेदः ।
नोच्चार्यंते मन्त्राः। संस्कृतिबाह्ये र्जनै र्यथाविहितम् ॥ 7

स्वरवर्णहीनमन्त्रा । न केवलाऽपेक्षितालाभः ।
अनपेक्षितं च लभसे । कूपात्खनकः पिशाचमिव घोरम् ॥ 8

नाध्याप्योऽत्र धनुर्वेद । स्तृष्णा तव न शाम्यति ।
अलमन्यथा विचिंत्य । हितैषी कथयामि ते" ॥ 9

श्रुत्वैत देकलव्यो । भग्नाशो ऽत्यन्तदूनात्मा ।
प्राञ्जलिराज्ञां गन्तुम् । द्रोणमयाचिष्ट शीर्षमवनम्य ॥ 10

बाष्पायमाणनयनम् । दीनास्यं तं गुरु वीक्ष्य ।
स्निग्धो यदृच्छयाह । "युज्यस्वेष्टेन मा स्त्व" मिति ॥ 11

## 2

संकुचितविकृतवदनम् । नेत्रे पर्यश्रुणी, दृशं शून्याम् ।
दधता स्थितं कुटीरो । पांते केनाऽपि दग्धचित्तेन ॥ 12

"भजन् द्रोणं शिष्यवृत्त्या । भवेयं तदनुग्रहात् ।
सुधन्वेति दिवारात्रम् । मयोत्स्वप्नायितं भृशम् ॥ 13

धिक्कष्टं ! हतदैवम् । मनोरथस्य मम मूलमुत्पाट्य ।
सिञ्चत्युष्णजलै र्बत ! कांक्षितसिद्धिः कथन्त्वपुण्यानाम् ? 14

नास्त्यधिकस्तुल्यो वा । द्रोणस्येति प्रशंसन्ति ।
अन्यत्रास्मात्तीर्था । तृष्णा मे शम्यते कुत्र ? ॥ 15

न मया शक्यमवाप्तुं । वृक्षाग्रफलं यथा धनुर्विद्या ।
क्रियतेऽत्र मुधा ग्रीवा । प्रसारण मूढचित्तेन" ॥ 16

इति शोचत उच्छ्वसतो । नैराश्या देकलव्यस्य ।
व्यद्योतत विद्युदिव । कश्चिद्भावो हृदाकाशे ॥ 17

अविलंबितमुत्थाया । सनात्समानीतपङ्कमृत्तिकया ।
निरमाथि द्रोणस्य । मूर्तिस्तेनाञ्जसा मुहूर्तिर्धे ॥ 18

समासीनः पुरस्तस्य । पत्रैः पुष्पैरपूपुजत् ।
प्रदक्षिणनमस्कारा । नाचचार मुहुर्मुहुः ॥ 19

अभ्यस्यति यावदयम् । शरान् पुरो विग्रहस्य, चित्रमिदम् ।
तावत्स्फुरंति चित्ते । तदस्त्रविद्यारहस्यानि ॥ 20

शिक्षयति गुरुर्यद्यत् । पाण्डवान् हस्तिनापुरे ।
धनुःशास्त्रे दविष्ठोऽपि । तत्तत्सर्वं निशाम्यति ॥ 21

अर्चिता प्रतिमा तस्य । प्रणतस्य शिरस्तटे ।
हस्तमाधाय वक्तीव । "त्वं सिध्ये" त्यस्त्रकर्मणि ॥ 22

भगवान् द्रोणाचार्यो । दृष्टः स्वप्नेषु तस्य रजनीषु ।
उपदिशति मन्त्रविद्या । अध्यापयति प्रयोगतंत्रांश्च ॥ 23

"अर्चता प्रतिमामेवम् । मयाप्ता कृतहस्तता ।
साक्षाद्गुरूपदिष्टास्ते । कियत्कौशलमाप्नुयुः ? ॥ 24

न कृतं तावत्पुण्यम् । मये" ति हर्षं कृतार्थतया ।
शोकं चापुण्यतया । आतपवर्षाविवाप समकाले ॥ 25

"भो गुर्वाशीर्वचसः । फलं मयाप्त" मिति स कृतज्ञः ।
"छित्वाऽप्यंगं देयाऽ । वश्यं गुरुदक्षिणे" त्यकृत मनसि ॥26

# 3

शिक्षमाणं लक्ष्यभेदां । स्तं समासद्य कुर्कुरः ।
वने व्यक्षेपयच्चित्तम् । बुक्कनैः कर्णकर्कशैः ॥ 27

तर्जनै र्भर्जनै र्वापि । न चलन्नीषदुच्चकैः ।
श्वा बुक्कति स्म; येनायम् । भ्रष्टलक्ष्यो ऽभवन्मुहुः ॥ 28

व्याधेन व्यथितेन । सप्त शराः कुप्यता सकृत्क्षिप्ताः ।
संलग्नाः शुनकमुखे । विचित्रचित्राकृतिं विदधतिस्म ॥ 29

शरविद्धः श्वा क्रन्दन् । प्रतिध्वनन्तीषु दिक्षु परिधावन् ।
विसृजन् लालाः पश्चा । त्पश्यन् पश्यन् पलायनं चक्रे ॥ 30

वनेऽत्यध्वं तत्र तत्र । पर्यट्य शुन मागतम् ।
शरचित्रमुखं वीक्ष्य । पाण्डवा विस्मयं ययुः ॥ 31

शरशिल्पं श्लाघमानाः । स्तुवाना हस्तकौशलम् ।
धन्विनं श्वाविधं द्रष्टु । कामास्ते प्रस्थिता स्ततः ॥ 32

पर्यटद्भि ररण्यान्याम् । तैर्निषादो विलोकितः ।
कुत्रचिन्मृण्मयद्रोण । मूर्त्यग्रे शरशिक्षणः ॥ 33

आत्मानं गोपयन्तस्ते । पश्यन्तस्तस्य कौशलम् ।
दृग्भारभूतं चापस्य । शुष्कास्या अतपन् हृदि ॥ 34

निशाता एकलव्यस्य । बाणा लक्ष्यं न केवलम् ।
किन्त्वलक्ष्यं फल्गुनस्या । प्यच्छिन्दन् हृदयं बत! ॥ 35

गताः कथंचिद्व्याधस्य । पुरः स्थित्वा तमब्रुवन् ।
"कस्त्वं? ते व्यपदेशः कः? । क्व वासोऽ स्त्रगुरुश्च कः ?"॥ 36

## 4

इति पृष्टः प्रत्यवादीत् । "भ्रातरः! श्रूयतां; मम ।
नामैकलव्यो; व्याधोऽहम् । वास्तव्योऽत्रैव कानने ॥ 37

भगवांश्चापाचार्यः । शैलानां मेरुवत्समुत्तुङ्गः ।
शस्त्रभृतां; कीर्तिधनो । द्रोण; स्तत्पादशिष्यरेणुरहम्" ॥ 38

मर्मवेधिशरेणेव । तदाख्यानेन ते हताः ।
जग्मु स्त्यक्त्वा पाण्डवास्तम् । तत्तेजोविमुखीकृताः ॥ 39

व्याधस्य तेजसा जातो । व्रणो हृदि किरीटिनः ।
क्षते क्षारमिवाद्यासीत् । द्रोणस्याचार्यकं श्रुतम् ॥ 40

ततश्चित्तेन दग्धेन । पार्थोऽगच्छत् स्वमंदिरम् ।
उपगत्य द्रोणमेवा । वोचद्भ्रूकुटिताननः ॥ 41

"भवता प्रतिश्रुतं मे । 'कुर्यां ककुदं धनुर्धराणां त्वाम् ।
ऋत' मिति; मृषोद्यमेत । त्त्वतिसर्वः कोऽपि दृष्टोऽद्य ॥ 42

अयं किल भवच्छिष्यो । न कदापि त्वयोदितः ।
कश्चिदस्तीत्यद्ययावत् । किं ते लभ्यं प्रतार्य माम् ॥ 43

अतिशेते स धानुष्को । नहि मामेव केवलम् ।
परंतु त्वां त्वदाचार्यो । स्तदाचार्यांश्च हेलया" ॥ 44

इति मर्माविधं वाचम् । ब्रुवाणं क्रुद्धमानसम् ।
प्रतिवक्तु मजानन् स । स्थितस्तूष्णीक उन्मनाः ॥ 45

शनैः पार्थो निषादस्य । धनुषः पारदृश्वताम् ।
लाघवंचापि हस्तस्य । विस्तरेण न्यवेदयत् ॥ 46

स्वात्मानमनुसृतवते । समर्चितां तां धनुर्गुरवे ।
प्रतिमां, प्रणम्य च शरा । नभ्यस्यन्तं किरात मदद्र्शत् ॥ 47

## 5

अवलोक्य गुरुं दूरात् । प्रत्युद्गम्यांघ्रिपद्मयोः पतितः ।
प्रक्षाल्य हर्षबाष्पैः । स एकलव्यो दृढाभक्तिः ॥ 48

दत्वा तस्मा अर्घ्यपाद्ये । उपवेश्य मृगाजिने ।
वीजयन् गतखेदं त । मात्मनोऽशुश्रवत्कथाम् ॥ 49

विज्ञाय तस्य भक्तिम् । द्रोणोऽभिनिविष्टतां, धनुःशास्त्रे ।
निष्णाततां च शंसन् । परामृशच्चांगकं स्निग्धः ॥ 50

प्राञ्जलिरवद व्याधो ! "भगवन् ! सुप्रात मद्य पुण्याहम् ।
चिरसंचित मात्मीयं । भाग्यं फलित मिति निश्चिन्वे ॥ 51

व्यथते त्वात्मा साक्षा । त्त्वदंघ्रिसेवामहाभाग्यम् ।
न प्राप्त मिति महात्मन् । धन्योऽहं त्वत्कृपापात्रम् ॥ 52

दूरात्करिपुरात्तीर्त्वा । नदीः, क्रान्त्वा महाटवीः ।
अद्री नारुह्यावरुह्याऽ । गतः; स्नेहः किया न्मयि ? ॥ 53

मनोरथोऽस्ति मे कश्चित् । यत्सिद्धिं संशये; यतः ।
पुरेव क्रियते व्यर्थं । इति शंकाकुलं मनः ॥ 54

अभिलष्यत्यात्मा मे । भवते गुरुदक्षिणा समर्प्येति ।
मा वादीः ! प्रतिषेधम् । तारय ! मां; वृण्वभीष्टवस्तूनि ॥ 55

धनराशीन् धान्यराशीन् । क्षेत्राणि स्वर्णसूनिच ।
यच्छाम्यहं किं बहुना ? । स्वाङ्गं छित्त्वापि दीयते ॥ 56

परिग्रहानुग्रहेण । धन्यं मां कुरु सर्वथा" ।
इत्यूंचिवांस माचार्योऽ । ब्रवी च्छीर्षं मृदु स्पृशन् ॥ 57

"अहं कथं दक्षिणीयो ? । मया किं शिक्षितं तव ?
कथं शिष्योऽस्यपूर्वेयम् । शैष्योपाध्यायिकावयोः ॥ 58

अभिनन्द्यः सर्वथाऽसि । तिष्ठ! त्वं; साधया म्यहम्" ।
इति निर्यातुकामं तम् । दण्डवत्प्रणिपत्य सः ॥ 59

"गुरुदेव ! प्रसीदेष्टाम् । गृहाण! गुरुदक्षिणाम् ।
अनृणं कृतकृत्यं च । कुरु मा" मित्ययाचत ॥ 60

दीनालापै र्याचितोऽपि । चिंतयन् दक्षिणां कथम् ।
गृह्णाम्यशिक्षिताच्छिष्या" । दित्यगृह्णन्नयाद्गुरुः ॥ 61

## 6

तत स्तत्रस्थितः पार्थ । स्तं प्राप्याह "वनेचर !
कंचिच्छिष्यं कृतीकर्तुं । माचार्येण प्रतिश्रुतम् ॥ 62

शिष्यस्त्वं यदि गृह्येथाः । प्रतिज्ञाभंग आपतेत् ।
येनाचार्यो दूषितः स्यात् । ततस्तेनावधीरितः ॥ 63

यथास्यादृजु राचार्यः । कृतार्थस्त्वं यथा भवेः ।
कश्चित्तथाविधोपायः । कथंचिदपि चिंत्यताम् " ॥ 64

एवं वदति किरीटिनि । विषण्णचित्तेन तेन शबरेण ।
कथमप्याचार्यस्यं । शिष्यत्वं प्रीणता समाधायि ॥ 65

"प्रतिज्ञातः शिष्य एव । क्रियतां गुरुणा कृती ।
द्रोणशिष्योऽयमित्येत । दलं मे केवलं यशः ॥ 66

जीवाम्यहं शिष्यरेणु । भ्रात ! मास्तु ममेतरत् ।
इतिकर्तव्यतामूढम् । कर्तव्येऽद्य नियुंक्ष्व माम्" ॥ 67

तेन हृष्टः पाण्डवोऽख्यत् । "यद्येव; मुपपद्यते ।
त्वद्दक्षिणकरांगुष्ठो । गुरवे दक्षिणार्प्यताम्" ॥ 68

## 7

इति वचनेऽवसिते स । व्याधश्छित्त्वात्मनोऽगुष्ठम् ।
गुरुदक्षिणां समार्पिप । दाचार्यार्थं तदा तस्मै ॥ 69

गुरोरनपराद्धस्याऽ । पतन्मूर्धनि दुष्कृतम् ।
पाण्डुपुत्रस्यासहिष्णो । र्वनेचरयशो घ्नतः ॥ 70

भगवान् द्रोणस्सदयः । शिष्यस्य हितं विचिंत्य पार्थस्य ।
कबलीचकार शूली । विषमिव हा ! हन्त ! तदपयशः ॥ 71

## 2. रुरुप्रमद्वरम्

### 1

फलपुष्पा ण्यलभ्यानि । पश्यन्त्यै लब्धुमिच्छया ।
अपचित्याग्रशाखाभ्यो । रुरु स्तस्यै प्रयच्छति ॥ 1

"पुष्पधूल्याकुले नेत्रे । भोः ! फूत्कुर्वि" ति याचते ।
"मास्प्राक्षी!" रिति वक्तारम् । स्पृशत्येव हसन्मुखी ॥ 2

सवयोभिः सखीभि स्ताम् । क्रीडन्तीं बालिकां जिताम् ।
धारयन्तीं सन्निधाय । रुरु र्मोचयति स्वयम् ॥ 3

विधूनयन् पुष्पशाखा । स्तरोः कन्या मथस्थिताम् ।
अभिषिंचन् सुमासारै । रभिषिक्त स्तया पुनः ॥ 4

कलस्वरं हसन्ती सा । निकुञ्जेषु निगूहिनम् ।
गुप्तक्रीडासु धावित्वा । मृग्यन्ती संस्पृशत्यमुम् ॥ 5

परस्परं प्रश्नयन्तौ । निगूढार्थाः प्रहेलिकाः ।
तौ पर्यायेण जयिनौ । हसतःस्म जितौ मिथः ॥ 6

उदन्च्यते जलं तेन । सिच्यन्ते तरव स्तया ।
आद्यानि मे; तवान्यानि । फलानीत्याह हासिनी ॥ 7

अन्विष्यन्ती तत्र तत्र । रुरुमेवोपगच्छति ।
आहूताऽपीतरैर्बालै । रभ्येतुं बालिकामणिः ॥ 8

यथाच्छायात्मनस्तस्य । तच्छाया च यथात्मनः ।
पतेदंगे तथा स्थित्वा । बाला सन्ध्यासु मोदते ॥ 9

शिलाघातात्स्रवद्रक्त । पादाग्रां रुदतीं रुरुः ।
प्रमृज्य बाष्पाण्युद्धृत्य । वहन् स्कन्धेन गच्छति ॥ 10

क्रीडन्त्याश्चरणे तस्याः । कण्टकेन क्षते बत! ।
पश्यतः कण्टकशतै । रुरोः पादः क्षतो भवेत् ॥ 11

बालशाखा बालशाखा । स्त्रियं वल्लीषु वल्लरी ।
मयूरी च मयूरीषु । चरन्ती तत्र दृश्यते ॥ 12

नाश्नात्यददती तस्मै । यत्किंचिदपि बालिका ।
दत्तं परैश्च यत्स्वस्मैं । तदर्धं सोऽपि यच्छति ॥ 13

हसिता तेन "शुकीति" । "गोरंकुस्त्वन्त्वसी" ति सा ब्रूते ।
"हरिणी" त्यपहसिताऽह । "हरिण" स्त्वमसीति च
प्रगल्भेव ॥ 14

तस्य तरो रेव फलम् । स्वादीयोऽभू त्तया करस्पृष्टम् ।
तस्यैव च प्रसूनम् । तयात्वपचितं रुरोः सुगंधितरम् ॥ 15

अवीक्षमाणावन्योन्यम् । न क्षमेते मुहूर्तकम् ।
उत्तानहृदयौ दृष्ट्वा । तौ नन्दन्त्याश्रमस्थिताः ॥ 16

## 2

कालेन गच्छतांगेषु । संनद्धं यौवनं तयोः ।
शनै र्दूरापसृतयो । श्चित्ते संश्लिष्यतो मिथः ॥ 17

उपक्रमेते संलाप । मन्योन्यं तौ यथापुरम् ।
गद्गदन्तौ वचोमध्ये । त्रुट्यन्तौ रुपत स्तदा ॥ 18

संगच्छेते न चान्योन्यम् । संगम्यापि न पश्यतः ।
परिवृत्य मुखे दृग्भि । र्जेघ्नीयेते शरैरिव ॥ 19

आत्मनः शैशवक्रीडा । गोष्ठीचेष्टा स्तदातदा ।
प्ररोमन्धायमानाभ्याम् । ताभ्या मानन्द्यते मनः ॥ 20

## 3

निहताऽकाण्डे काचि । द्बालशुकी प्रेमपात्रमाश्रमिणाम् ।
स्थूलोतुना कदाचि । द्यच्छ्रुत्वा तापसैश्च बहुरुदितम् ॥ 21

नलिनीं ललामभूताम् । सरसो गज उज्जहार मदमत्तः ।
छिन्ना मूले लतिका । मनोहरा मूषिकेण हतकेन ॥ 22

दुःशकुनान्यवलोक्य । प्रत्यक्षं, प्राप्य दुःस्वप्नान् ।
शंकितमतिभि र्मुनिभि । र्विनिश्चितं शान्तिकर्मणांकृतये॥ 23

## 4

सह तापसकन्याभिः । खेलन्ती बालिका प्रमादेन ।
पादेनामर्चाऽहिम् । तेन क्रुद्धेन हन्त! सन्दष्टा ॥ 24

फेनायमानसृक्का । तिमिरपिहितदृग्विलुप्तमुखकान्तिः ।
निश्चलकनीनिका च । प्रमद्वराऽम्रियत हन्त! हा! हा! धिक्!25

"भ्रान्त्यात्मानं दृष्टमात्रम् । जना" इत्युत्थदुष्फणः ।
जागर्ति सर्पः संन्दष्टुम् । मर्षयेत् किं प्रमर्दितः ? ॥ 26

सख्य स्तस्या रुदत्यस्ताः । सोरस्ताडं प्रधाविताः ।
आवेदयन्नाश्रिमिभ्यो । वैक्लब्याहतचेतसः ॥ 27

अस्तंगतेवेन्दुकला । वातोद्धूतेव दीपिका ।
मृता सा; येन संच्छन्नम् । दिवाऽपि तमसाऽश्रमम् ॥ 28

"भगिनी मम कुत्रास्ते ?। स्वसा मे क्वास्ति ? हा! हताः।
अविधा! अविधे" त्युच्चैः । सख्यः क्रन्दत्य आगताः ॥ 29

विवर्णवदना वाष्प । धाराक्लिन्नमुखा मृगाः ।
पश्यन्तःपालनीं स्वीया । मनदन्तस्तृणं स्थिताः ॥ 30

व्यरमन्नृत्यात् केकी; व्यरमद्धत! कोकिलापि कलगानात्।
विरतवचाः कीरोऽपि । तच्छिष्यतया कृतज्ञभावेन ॥ 31

जलसेकै रालवाले । स्वात्मानं दोहदैश्च सा ।
संपोष्यावर्धयच्चेति । वृक्षैर्मूकैः स्थितं शुचा ॥ 32

## 5

दुःखोदन्तममुं श्रुत्वा । रुरुः शोचन् प्रमूर्छितः ।
क्षणादुत्थाय चुक्रोश । यन्निशम्यारुदन् शिलाः ॥ 33

"प्राग्जन्मस्विह जन्मनि । चाचरितं यत्तपो मया सर्वम् ।
मुनयः! प्रदीयते; मे । प्रमद्वरा योज्यतां प्राणैः ॥ 34

तपसः फल मेषा मम;। मूर्तं पुण्यं; मम प्राणाः ।
प्राणानां; न च जाता। जनिष्यते नापि तादृशी बाला ॥35

क्रूरसत्त्व राश्रमेषु । प्रशान्तैर्भूयते खलु ।
कथं हन्ताहिनाऽनेन । नोत्सृष्टं क्रौर्यमात्मनः ॥ 36

'सुकृती गतायु' रिति वा । ग्लक्ष्यं भूता ममार सा बाला ।
'पापी चिरायु' रिति वा । ग्लक्ष्येण मया कियच्चिरं
जीव्यम् ॥ 37

क्षीणसारं स्थाणुकल्पम् । ममांग मभव द्यतः ।
कर्तुं नालमहं किंचि । जीवन्नपि मृतोऽस्म्यहम् ॥ 38

निर्वाणमाश्रमज्योतिः; । स्रस्ता माला गलान्मम ।
समुज्ज्वलाऽभ्रशत्तारा । दैवेनोपहतोऽस्मि हा ॥ 39

वनदेवते! ऽम्ब! कृपयाऽ । विलम्ब्य संजीवकरणीं ते ।
दत्वा प्रमद्वरायै । जीवय! सा मे शरीरार्धम् ॥ 40

हरिणाः ! 'हरिणाक्षीं' वः । प्रियां सखीमन्तेरण हरिणांकः ।
विज्ञाप्यतां भवद्भि । स्तेनाप्तेनाऽमृतेन सा जीव्या" 41

एवं रुदतोप्यस्य । यावत्संप्रार्थना न फलिताऽभूत् ।
केनापि, ताव "देते । बिभ्यति कालादि" वेति
मुनिपुत्रः ॥ 42

क्रुध्यन् तस्मै मनसा । प्रज्वलताऽब्रूत "रे ! काल !
पापिन् ! प्रत्यर्पय मे । प्रमद्वरासू स्त्वया मुषितान् ॥ 43

भवितव्यं शसेन । त्वयाऽन्यथाऽद्येति; यच्छ्रुत्वा ।
स कृतांत स्सन्त्रस्त । स्तं सांत्वयितुं विसृष्टवान् दूतम् ॥ 44

## 6

आगत्यायमदृश्यो । व्योम्नि स्थित्वा गभीरकण्ठेन ।
प्राहैवं तं दूषण । तिक्तानि वचांसि सांत्वमधुराणि ॥ 45

"रुरो ! किं मन्यसे कालम् ?। समवर्ती स धर्मराट् ।
कथं तमीहसे शप्तुम् ? मुष्टिनाऽद्रिं भनक्षि किम् ?॥ 46

विद्यावानपि मूर्खस्त्वम् । प्रतिभासि रुरो ! मम ।
जन्ममृत्य्वोः कर्म जन्तो । हेतुर्नात्र यमः प्रभुः ॥ 47

मृतैः कैर्वा जीव्यतेऽत्र ? त्वं शप्ता किं न शप्यसे ?
भगवान् दयमान स्ते । प्रियं कालश्चिकीर्षति ॥ 48

यदि स्निह्यसि तस्यां त्वम् । यदि दूनोऽसि तत्कृते ।
तवार्धायुर्यच्छ तस्यै । येन सा धारयेदसून्"॥ 49

## 7

स निशम्येदं वचनम् । "प्रमद्वरायै प्रदीयतेऽर्धायुः" ।
इति यावद्वक्ति गिरम् । तावत्स्वापादिव प्रबुद्धा सा ॥ 50

नलिनीव धौतपङ्का । शशिरेखेव च वलाहकान्मुक्ता ।
सा कन्याद्योतिष्टा । पास्ताहिविषा यथापूर्वम् ॥ 51

प्राप्तमृत्युर्लब्धजीवा । बभासे सा रुरोर्दृशोः ।
प्रतप्तस्वर्णवल्लीव । पूर्वतोऽपि समुज्ज्वला ॥ 52

मन्त्राक्षतान् मौनिवर्गो । वनलक्ष्मीः सुमाक्षतान् ।
तच्छीर्षयो र्व्यकारिष्टाम् । शकुन्तैर्मंगले कृते ॥ 53

"किं न यच्छति यो मह्य। मद्दा दर्धमायुषः" ।
इत्यग्रहीत्तदर्धांग । मादौ; शिष्टं क्रमाद्वधूः ॥ 54

तदारभ्यावर्तयन्तौ । शैशवाभ्यस्तकेलिकाः ।
पुनःपुनः प्रीणयन्ता । वन्योन्यं तौ ननन्दतुः ॥ 55

## 3. चिक्रोडकथा

### 1

परस्परं स्पर्धमाना । उत्पाट्याद्रीन् महातरून् ।
आनीयांभोनिधेर्गर्भे । पातयन्ति कपीश्वराः ॥ 1

कृतहस्तः सेतुबन्धे । नलस्तांस्तान् महोदधौ ।
प्रतिष्ठाप्य निबध्नाति । सेतुं दृष्टश्रुतेतरम् ॥ 2

मुखं व्यादाय जलधिः । शैलादींस्तत्र पातितान् ।
सर्वभक्ष इवश्नस्ता । नुद्गिरत्यूर्मिघोषणैः ॥ 3

स्वेदाम्बुभिः कर्मकृताम् । कपीनामुच्छ्र्यन् भृशम् ।
अब्धिः सेतुं बध्यमानम् । निर्मज्जयति नैकशः ॥ 4

अक्षान्त्येव च वाराशि। र्वानराणां बलानि च ।
आघातैः प्रतिघातैश्च । श्रमयन्ति परस्परम् ॥ 5

सुग्रीवाज्ञाभंगभीत्या । भक्त्या च रघुनन्दने ।
यावच्छक्यं जागरूकै । र्निर्व्यूढाः कपिभिः क्रियाः ॥ 6

भूत्वा ते सहकृत्वानः । प्रेरयन्तः परस्परम् ।
कपिसंघा दिवारात्रम् । कार्यनिर्वहणोद्यताः ॥ 7

सहस्रैरिव हस्तैश्च । सहस्रैरिव चांघ्रिभिः ।
गजायुतबलेनेव । चैकैको व्यापृतः कपिः ॥ 8

नक्तंदिव मजानन्तो । न वशा क्षुत्पिपासयोः ।
ध्यायन्तो रामपादाब्जे । क्रियाः कुर्वन्ति वानराः ॥ 9

## 2

एकदानुसृतो भ्रात्रा । सुग्रीवेण च संचरन् ।
सेतुबन्धन कार्याणि । राघवः पर्यवेक्षते ॥ 10

सेतुक्रियावानरै स्तै । र्भूः प्रसूतेव निर्गतैः ।
पिपीलिकागांगयात्रा । समा याति शनैर्गतिः ॥ 11

"दशयोजनविस्तीर्णः । शतताल्द्वयस उदधिरयम् ।
बद्धव्यः कथ" मिति हृदि । चकार चिंतामतीव काकुत्स्थः ॥12

परिवृत्तिः खलु भूमेः व्योम्नि प्लवनं हि हस्ताभ्याम् ।
उत्पातनं हिमाद्रेः रचना सेतोर्महांभोधेः ॥ 13

## 3

तरुशाखाशिखरस्थ । श्चिक्रोडः कश्चिदीक्षमाणस्तत् ।
क्लिश्यति हृदि "न समाप्ता । सेतोरचनाऽव्ययाव" दिति ॥14

"चंचूपुटैः काकगृद्ध्राः । पातयन्त्यंबुधौ शिलाः ।
चटकाः सूत्रखण्डानि । चारं चारं ककुब्गणे ॥ 15

अनुगच्छन्त्यब्धिमार्गम् । बद्धश्रेण्यः पिपीलिकाः ।
धावन्ति पतगास्तत्र । स्वस्वसेवाप्रदित्सवः ॥ 16

हन्त ! हन्तैभि रन्यैश्च । भग्नांगैः श्रम्यते भृशम् ।
धिङ्मां ! धिङ्मां ! कर्तुमत्र । नकिंचित्प्रभवाम्यहम् ॥ 17

चिक्रोडश्चिंतयन्नेवम् । मुञ्चन्नश्रूणि वीक्षते ।
दिशः शून्याः; मनो दग्धम् । दधात्यास्यं च कोचति ॥ 18

## 4

श्रीरामनाम वदने; हृदये श्रीरामपादपद्मयुगम् ।
श्रीरामरूपमक्ष्णोः । पुरतः; कुर्वन् मुहूर्त मस्थात्सः ॥ 19

उड्डीय पतङ्गमव । न्निपत्य तीरेऽम्बुधेः सेवाम् ।
कर्तुं विचिंत्य काम । प्यप्रभविष्णुः परं दुःख्यन् ॥ 20

शरवेगेनाधस्ता । द्वृक्षस्याग्रा, दधस्पदा च्चाब्धिम् ।
धावित्वा चिक्रोडः । क्षणात्प्रविष्टस्तदम्भांसि ॥ 21

स्नातस्तटमारूढः। सिकतास्ववलुण्ठ्य पुनरसौ यातः।
सेतोर्बन्धनदेशे। सैकतरेणून् पुनःपुनर्धुवति॥ 22

## 5

स्वस्यैव सिकतालेशै। र्गार्धोऽम्भोधिर्भवे; त्ततः।
निरन्तरायं बद्धःस्या! त्सेतु रित्यमुदच्च सः॥ 23

स्पर्धमान इवात्यन्तम्। चिक्रोडः सह वानरैः।
सैकतादम्बुधिं तस्मा। त्सैकतं प्रति धावति॥ 24

तटदेशमटन् रामः। सहागतो भ्रातृवानरेन्द्राभ्याम्।
दूराद् दृष्ट्वा जन्तुम्। तं स्मयमानोऽवद त्स्वपार्श्वस्थौ॥ 25

"अन्यदेवकृतं साह्यम्। वानरै र्बलिभि र्मम।
अन्यदेव च चिक्रोड। कृतं भोः! कौतुकावहम्॥ 26

प्रभवेयं शोधयितुम्। ऋणं कपीनां यथाकथंचिदपि।
नालं निर्यातयितुम्। चिक्रोडस्य तु जनुःशतेनाऽपि॥ 27

आनीयतां दिदृक्षेऽहम्। तं चिक्रोडं सुहृद्वरम्"।
इत्यादिष्टो वानरेन्द्रः। सुग्रीव स्तं समानयत्॥ 28

पुरो विलोक्य काकुत्स्थम्। भगवन्तं प्रणम्य सः।
कृत्वा प्रदक्षिणान् भक्त्या। पपात पदपद्मयोः॥ 29

"कृच्छ्रैर्व्रतैस्तपोभिश्च। यो देवो हि सुदुर्लभः।
स दृष्टोऽश्रम मल्पिष्ठ। जन्तुना किं मया कृतम्"॥ 30

इत्यभिनन्दन्तं स्वम् । तं जन्तुं वीक्ष्य संप्रीतः ।
मेने दाशरथिर्हृदि । "नायं चिक्रोडमात्रोऽस्ति ॥ 31

दृष्टं श्रुतमपि नैव । प्राणिष्वल्पेष्वमूदृशं चरितम् ।
केनाऽप्यभाग्यहेतो । स्स्वतपोभ्रष्टेन भवितव्यम् ॥ 32

## 6

मत्वैवं हस्ताभ्या । मुद्धृत्य मुहुर्मुहु स्तमामृशति ।
लालयति स्मितपूर्वम् । चुम्बति; संलापयति च पुत्रमिव ॥33

"चिक्रोड ! मे प्राणबन्धो ! हृष्टोऽस्मि तव सेवया ।
नालं प्रत्युपकर्तुं ते । वरं वृण्वि" ति सोऽब्रवीत् ॥ 34

ततः प्रणम्य चिक्रोडोऽ । वद "द्धन्योऽस्मि भोः प्रभो !
रोचते मे वोढुमङ्गम् । त्वदनुग्रहचिह्नितम्"॥ 35

इति तत्रभवान् रामोऽ । भ्यर्थितस्तंस्पृशन् मृदु ।
गात्रेऽस्यामुद्रयद्रेखा । स्तिस्रो हस्तेन सुन्दराः ॥ 36

भूयोऽर्थितः स तस्मिन् । प्रायुंक्ताशिष "ममू रेखाः ।
कुलमुद्रा अनूबध्न । न्त्यनन्तरीयान" पीति कारुणिकः ॥ 37

चिक्रोडं निर्यान्ताम् । पश्यन्नास्ते चिरेण दाशरथिः ।
परिवृत्य च स प्रणमन् । मुहुर्मुहु रधाव दब्धितटम् ॥ 38

## 4. गानपरीक्षा

सुरगायनयो र्नारद । तुम्बुरयो रात्मनस्तरतमत्वे ।
स्पर्धांकुरः प्रभूतः । क्रमेण वृद्धश्च वृक्ष इव ॥ 1

कुशला ये संयमितुम् । शिरसी खल्वाटयोर्महात्मानः ।
उभयो स्ते पार्श्वगता । अजुहवुरेधांसि वैराग्नौ ॥ 2

हस्तिमशकांतरं ना । वित्येके "नाब्धिपल्वलांतर" मिति ।
अपरेण चोक्तमिति च । कथितं कर्णेजपै र्मिथो बहुधा ॥ 3

तृणाय मन्यतेऽन्यं कोऽ । प्यन्यस्तं मनुते रजः ।
देशकालौ प्रतीक्षेते । तौ पराभवितुं मिथः ॥ 4

उभौ दिव्यमुनी एव । सात्त्विकौ ज्ञानिनौ च यौ ।
तथापि तौ प्रावृततताम् । निन्दन्तौ पामराविव ॥ 5

तौ विरिञ्चि मुभौ गत्वा । कदाचित्प्रणिपत्य तम् ।
"निर्णीयतां तारतम्य । मावयो" रित्ययाचताम् ॥ 6

प्राह भगवान् विधाता । "तुम्बुर ! मे नारदः पुत्रः ।
येन भवान् भवदीया । मां ब्रूयुः 'पक्षपाती' ति ॥ 7

ततो विहाय मां गत्वा । वैकुण्ठं पृच्छतं युवाम्" ।
इत्युक्तमात्रं तद्द्वन्द्वम् । प्रतस्थे हरिमंदिरम् ॥ 8

तयोः श्रुत्वाऽभ्यर्थनां ताम् । विष्णुरप्याह "तुम्बुर !
ज्ञातं ते खलु मुख्योऽयम् । भक्तेषु मम नारदः ॥ 9

शङ्कितः स्यां पक्षपाती । न त्वया त्वितरैर्जनैः ।
मया भवत्तारतम्यम् । विनिर्णेतुमसांप्रतम् ॥ 10

तपस्यन्तं हनूमन्तम् । हिमशैले युवां गतौ ।
पृच्छतं; येन वां ज्ञेयम् । तारतम्यं भविष्यति ॥ 11

स महात्मा रामभक्तो । यश्च गायनतल्लजः ।
यं गायकाः प्रणम्यादौ । गातुं व्याददते गलम्" ॥ 12

इत्याज्ञप्तं मुनिद्वन्द्वम् । मववीर्य दिवो भुवम् ।
आञ्जनेयं तपोनिष्ठम् । गत्वैक्षिष्ट हिमाचले ॥ 13

शनैरुन्मील्याक्षिणी स । विलोक्य पुरतः स्थितौ ।
मुनी, कथां तयोः श्रुत्वा । हनूमां स्ता वभाषत ॥ 14

"शिलासने स्वीक्रियेताम् । भवद्भ्यामत्र तापसौ !
मया नीराजनं याव । द्राघवाय समर्प्यते" ॥ 15

इत्युदित्वा वानरेंद्रः । स्तोत्रगीतं प्रचक्रमे ।
स्थाणवोऽङ्कुरिता येन । प्रद्रुता अभवन् शिलाः ॥ 16

शिलापीठद्वये लीने । तौ पङ्कान्तर्न्यमज्जताम् ।
कपिगानवशीभूतौ । नाजानीतां दशामिमाम् ॥ 17

यावद्गीतं समाप्यायम् । नयने उदमीलयत् ।
तावल्लग्नं मुनिद्वन्द्वम् । घनीभूतशिलान्तरे ॥ 18

दिनान्ते मुकुलीभूते । जलजाते द्विरेफवत् ।
नारदस्तुम्बुरश्चास्ताम् । लग्नार्धाङ्गौ विपद्गतौ ॥ 19

तपस्विनौ हन्त! हन्त! क्लिश्यन्तौ क्षुब्धमानसौ ।
पश्चात्तसौ बहिर्गन्तु । मायस्यन्तौ बभूवतुः ॥ 20

"बहिः प्रापय मां मा" मि । त्यार्तालापौ पुनः पुनः ।
हनुमां स्तावुभौ वीक्ष्य । प्राह "भोः श्रूयतां मुनी ! 21

तारतम्यावबोधाय । युवामत्रागतौ खलु ।
शिलासने यथा लीने । भवद्भ्यां गीयतां तथा" ॥ 22

श्रुत्वोपावीणयत्सद्यो । यावच्छक्यं स तुम्बुरः ।
भिन्नभिन्नान् गीतरागान् । महान्तं कालमेव च ॥ 23

तथैवास्तां घनीभूते । शिलासन्धौ यथापुरम् ।
मृदुत्वमपि नप्राप्ते । व्यरंसीद्धन्त ! तुम्बुरः ॥ 24

उपक्रान्ते ततो गीते । नारदेन महर्षिणा ।
शिलापट्टौ मृदूभूय । बन्धो व्यश्लिष्यदल्पशः ॥ 25

आविष्कृत्य कलाप्रौढिं । मगासी हृषिपुङ्गवः ।
चिरमेव हृषत्पीठे । नाभूतां तु म्रदीयसी ॥ 26

यथा पङ्के विनिर्मग्नौ । बहि रागन्तु मक्षमौ ।
गजौ क्षुब्धौ मुनी दृष्ट्वा । हनुमा नन्वकम्पत ॥ 27

असमाप्तं नारदस्य । गीतमेवावलंब्य सः ।
आलपन्मधुरं येन । व्यलीयेतां शिलासिके ॥ 28

"दिष्ट्या लब्धं जीवितं मे" । मयाप्तं हि पुनर्जनुः ।
"सुप्रातोऽस्मीति हृष्यन्तौ । मुनी पङ्काद्बहिर्गतौ ॥ 29

प्रणिपत्य हनूमन्तम् ।  गीतविस्मितचेतसौ ।
विलीनविद्यादर्पौ तौ । जग्मतु र्विनताननौ ॥ 30

ज्याया नित्येव गण्यःस्या । न्नारदस्तुम्बुरादपि ।
यथैव केकराक्षोऽन्धात् । तथापि स गतो ह्रिया ॥ 31

## 5. मेघः

पीत्वेव मद्यमब्दो ।  मत्तो भूत्वा स्खलद्गतिर्गच्छन् ।
आकाशवीथिकायाम् । तिष्ठन् गच्छति च विस्मृतो गम्यम् ॥ 1

"नायमैकांतिको देश" । इति शङ्कालवं विना ।
पतन्नङ्के, स्पृशन्, गृह्णन् । मूढः श्लिष्यति तारकाः ॥ 2

न कदापि याति गृहिणीम् । वर्षासु यदृच्छया सकृद्याति ।
प्रत्युद्गतां पुरंध्रीम् । तटिल्लतां घोषणैं स्स भर्त्सयति ॥ 3

विहरन्ति नभोवीथ्या । मेकाकिन्योऽप्सरः स्त्रियः ।
चेद्दूषयेर्वज्रिणा त्वम् । छिद्यसे मेघ ! खण्डशः ॥ 4

## 6. कृतज्ञता

स्वरक्षणे जाग्रतो ये । घनास्तेषां विनिर्गमात् ।
म्लानो म्लानो वृक्षकोऽस्ति । म्रियमाणः कथंचन ॥ 1

स मर्मरैः प्रार्थयते । यातायातान् समीपगान् ।
न विदुः किंनु तद्भाषाम् ? द्रष्टुं तं कोऽपि नागमत् ॥ 2

अवेक्ष्य शोच्यतां तस्य । श्रुत्वा च प्रार्थनारवान् ।
निर्भिन्नहृ द्गलद्बाष्प । स्तं जीवयितु मैषिषम् ॥ 3

आलवाले दत्तसारे । कृतैः सलिलसेचनैः ।
द्वित्रैरेव दिनै र्वृक्षः । स दृष्टोऽपूर्वक्त्जनैः ॥ 4

प्रकृतिस्थः क्रमाद्भूजो । दृढस्कन्धश्च सारवान् ।
ऋणनिर्यातनार्थं मे । त्वरमाण इवावृधत् ॥ 5

प्राप्तकाले यथाशक्ति । पत्रपुष्पफलै र्युतम् ।
शाखाकराञ्जलिं भक्त्या । चलाङ्गो मह्य मार्पिपत् ॥ 6

"त्वयैवेदं दत्तमङ्गम् । तवैव; नतु मामकम् ।
छित्वा मां गृह्यतामिष्ट" । मित्यस्त्व्यद्भ्रमरस्वनैः ॥ 7

मत्सात्कृत्य स सर्वस्वम् । यावज्जीवं; मृतश्चमाम् ।
प्राप्य काष्ठेंगालभावम् । भस्मीभूयाऽप्युपाचरत् ॥ 8

## 7. शिलादृश्यम्

वर्षातपैर्नाभिभूतः । शैलश्रृङ्गोपरि स्थितः ।
मौनमुद्रां दधत्कोऽपि । तपस्यति महोपलः ॥ 1

स्पृष्टोऽपि शाखातन्वीभिः । पुष्पस्तनदलांशुकैः ।
गायन्तीष्वप्यासु कीर । कण्ठैर्नैषच्चलत्यसौ ॥ 2

अभितः परिवृत्यैनम् । प्रस्तराः प्रतिशेरते ।
तत्त्वोपदेशं प्राप्ता नु । समाध्याविष्टचेतसः । 3

कदा त्यक्तसमाधिः स्यात् ? कदा स्यात्तदनुग्रहः ?
इत्युत्कण्ठा स्तमीक्षन्ते । निर्निमेषदृशो जनाः ॥ 4

## 8. शैलः

काऽददाच्छैशवे स्तन्यम् । तुभ्यं माता ? यतो गिरे !
वज्रकायोऽसि; दीर्घायु । स्तव कस्याशिषः फलम् ? 1

पाषाणहृदयोऽपि त्वम् । त्वत् स्रवंति कृपापगाः ।
आश्रितान् क्षुद्रजन्तून । प्यवत्याश्रयदो भवान् ॥ 2

ओषधीः साररत्नानि । चार्थिभ्य स्त्वं प्रयच्छसि ।
यतस्ते कीर्तिशृङ्गाणि । भासंनेऽभ्रंलिहानि भोः ॥ 3

प्रसूतो यस्य, येनासि । वर्धितो, ऽभू स्त्वमीदृशः ।
दृष्ट्वोन्नतिं प्रतिष्ठां च । ते मुदं कियती मियुः ? 4

## 9. चन्द्रः

मेघशैले, व्योमगङ्गा । तीरे, कोणे च कुत्रचित् ।
आस्ते तपोवनं यत्रा । वसच्चन्द्रो महामुनिः ॥ 1

युवा शुद्धः कलापूर्ण । श्चारुमूर्ति र्मनोहरः ।
तमोहर्ता स लोकस्य । चाकाशीति समुन्नतः ॥ 2

मोहान्धं यौवनोद्रेका । त्पतन्तीं मुहुरात्मनि ।
अपास्यति करै र्दूरम् । नतु श्लिष्यति रोहिणीम् ॥ 3

आश्रमप्रांगणासीनः । सायं ज्योत्स्नामिषा दसौ ।
बोधय त्युडुशिष्येभ्य । स्तत्त्वगाथा दिने दिने ॥ 4

संशयेषु क्षालितेषु । तस्य प्रवचनै र्मुनेः ।
तुषाररूपेणाश्रूणि । ते मुञ्चन्ति विहायसः ॥ 5

## 10. झरी

ऊर्मिहस्तैस्तीरयुग्मे । वृक्षाः श्रेणीकृता इव ।
तत्स्पर्शनात्कोरकिता । रेजुः पुलकिता इव ॥ 1

गायति गीतं वंशो, । स्मिते कृतेऽपिच शरवणेन ।
मार्गं स्वस्य निरुध्य । स्थितेष्वपि प्रस्तरेषु मूढेषु ॥ 2

वेणीधृतवनपुष्पा । मन्दानिलबृन्दवेपमानमना: ।
आलिप्तफेनगन्धा । हंसीभिः संलपन्ती च ॥ 3

दूरीभूताऽस्पृशन्ती तां । स्त्वं कुत्र प्रस्थिता झरि ?
तव प्रणयराज्ये क । मभिषेक्तु हृदीहसे ? 4

## 11. कोकिलः

स्वागतं भोःसखे! तुभ्यम् । वसन्तास्थानगायक! ।
बहोः कालात्तु दृष्टोऽसि । त्वया कुत्र गतं? स्थितम् ? 1

किं विनेतुं गतोऽसि त्वम् । किन्नरी र्दिव्यगायनीः?
अभ्यस्तं नूतनं गीतम् । गीयतां कर्णपेशलम् ॥ 2

परुच्छ्रुतं मया गान । मुपचूतं स्थितेन भोः !
अद्ययावत्पुन र्नैव । श्रुतं तादृक्शुचि स्त्सखे ! ॥ 3

यदायदा स माकन्दो । मया दृष्ट स्तदातदा ।
त्वद्गीतं स्मर्यते; स्वादु । द्वारा श्चोवन्ति मे भृशम् ॥ 4

चूतासनसमारूढे । त्वयि गायति किन्वभूत् ?
शीतामृतं तवाश्यानम् । मधुरं तत्फलं यतः ? 5

किंनु पीतं वल्लरीभि । र्यतः पुष्पाण्यधुर्मधु ?
किंनु मग्ना मारुताश्च । नचेत्ते शीतलाः कथम् ? 6

श्रुते श्रुते भवद्गीते । प्रतिभासि च मे पिक !
अपूर्वभाषाकाव्यस्य । रसघट्टान् पठन्निव ॥ 7

ऋतु स्त्वया विना मन्ये । विदेशस्थप्रिया वधूः ।
देश स्त्वया विना विद्वान् । कुतोऽपि हतवाक्कृतः ॥ 8

## 12. मन्दमारुतः

### 1

किं देवी प्रकृति र्माता । पीयूषार्द्रैः कराम्बुजैः ।
सहस्रैः स्वान् लालयन्ती । समालिङ्गति पुत्रकान् ? 1

स्वर्गस्थै र्नन्दनोद्याने । श्लिष्टामरवधूजनैः ।
रचिताः कविभिः श्लोकाः । किं स्वक्रीडाभिवर्णनाः 2

स्निग्धयोर्नूत्नदम्पत्योः । श्लिष्टान्योन्याङ्गयोः परम् ।
किं निभृतभाषितानि ? अदिष्टानि प्रियाणि च ॥ 3

सान्द्रीभूता नभस्यादौ । वायुभिः शकलीकृताः ।
अणुभूताश्च कालेन । किमदृश्याः पयोमुचः ? 4

अमरीभि र्निगूढाभि । स्तिरस्करिणिकावशात् ।
यै र्वीज्यन्ते जनाः स्निग्धा । स्तानि स्तनपटानि किम् ? 5

नचेत्कथ मियान् मोद ? इयती माधुरी कथम् ?
इपन्मृदुत्वशीतत्व । मोहाश्च प्राणिनां कथम् ? 6

मन्दानिलाः ! कुत्र तप्तं ? कोऽददा दूरमीदृशम् ?
मानिनौ संगमय्यात्त । पुण्यस्येदं फलं किमु ? 7

## 2

क्रियते हि मन्दमारुत ! भवता विश्वोत्सवः प्रसन्नेन ।
नान्योऽस्ति त्वादृश इति । तत्काले श्लाघ्यसे जगत्प्राणः ॥ 8

स्थित एव हठादङ्गम् । भयावहं यथा विवर्ध्योच्चैः ।
उन्मूलयन् महीजान् । भञ्जन् सौधान् गिरीं श्चलयन् ॥ 9

हुंकुर्वाणैर्महाघोरैः । सहस्रै राननै र्भवान् ।
ग्रसिष्णुरिव लोकांस्त्रीन् । लक्ष्यते कालरात्रिवत् ॥ 10

दहनेन प्रज्वलता । संगम्य त्वं कदाचि द्धिक् !
हित्वा भीतिं पापा । त्कारयसि च लोकसंहारम् ॥ 11

दृष्टश्चद्भिः शैशवे त्वाम् । जनः स्वप्नेऽपि तादृशः ।
भविष्यसीदृशः क्रूर । इति नासी र्विशङ्कितः ॥ 12

पिशाचेनेवचाविष्टो । विवशो नाशयन् भुवम् ।
दुःस्थितै र्दुःखितै र्भूयो । जनैः शप्तः कथञ्चन ॥ 13

अनुशोचन्निवाश्रूणि । मुञ्चन् वर्षमिषाद्भृशम् ।
गर्जाव्याजाद्वारितोऽपि । तूष्णीं रोरुद्यते भवान् ॥ 14

## 13. पुष्पापचयः

समरंदैः सुमवृन्दैः । पत्रैर्हरितैश्च नेत्रपर्वकरीम् ।
उपसृत्य लतां कश्चि । च्चिन्वन् कुसुमानि संहृष्टः ॥ 1

पश्यति मयि स क्रूरः । पुष्पाण्यवचित्य निश्शेषम् ।
व्यपगतभूषां विधवां । बालामिव तां लतां कृतवान् ॥ 2

नास्त्यन्तरात्मा तस्येति । मन्ये; यद्यस्ति तर्ह्यसौ ।
न बोध्यते किं? "कार्यं तत् । दूष्यं द्राक्त्यज्यता" मिति ॥ 3

पश्यतो मम नेत्राभ्याम् । प्रस्नुता बाष्पवाहिनी ।
अयत्नमवदं "जाल्म ! किं काष्ठे ? ते करौ न किम् ? 4

अनपचितकुसुमभारा । नेत्रानन्दिन्युदीक्षमाणानाम् ।
सुभगा सुवासिनीव । वल्ली ते दृष्टि मपहन्ति ? 5

शपेयुः क्षुधिता भृङ्गा । हृतस्वा विलपेल्लता ।
"नष्टानि पुण्यक्षेत्राणी" । त्याक्रन्देन्मन्दमारुतः ॥" 6

इति रुष्टेन मयोक्तः । स आह "भगवान् महादेवः ।
कुसुमैर्लक्षैरर्च्य । श्चेतव्यान्यद्य सर्वपुष्पाणि ॥" 7

कर्णारुन्तुद एतस्य । श्रुते वाक्ये ममाऽजनि ।
मतिः "संताड्य तं कर्तुम् । गलहस्तबहिष्कृतम्" ॥ 8

कबलीकृतकोपेन । कथमप्युक्तो मया स दुष्टनरः ।
"मृत्पिण्डमते! मूर्ख ! पततो लतिकासु पश्य! भृङ्गांस्तान् ॥ 9

आयान्तं पातुं मधु । निवर्तयन् भृङ्गसंघातम् ।
किं कुसुमानि चिचीषसि ? निःशंकं देवपूजायै ? 10

अपहरसि बलाद्धन्त! । कबलानि मुखे कृतानि मधुपानाम् ।
न क्षालयितुं शक्यम् । जन्मशतेनापि पापमलम् ॥ 11

धिक्! धिक्! कृतगोघात । स्तब्धामिकपादुकाप्रदातेव ।
त्वं भवसि पुण्यलिप्सु । हतभृङ्गचय स्समर्चयन् देवम् ॥ 12

अवचित्य दुःखितेषु । प्राणिषु नकेषु कुसुमानि ।
अर्चयता भगवन्तम् । रे! मूर्ख! फलं त्वया किमासाद्यम् ? 13

तव हृदयकुसुममात्रम् । किं बहुना ? रोचते भगवते भोः ।
नत्वैतानि सुमानि । यदीच्छसि चिनुष्व पतितानि ॥ 14

अपचित सुगन्धिकुसुमैः । निर्जीव शिलार्चनाच्छ्रेयः ।
अभिवादनंलतानाम् । सुमफलभारेणदर्शनीयानाम् ॥ 15

निशम्योक्तं मया सर्वम् । कृत्वा गालोडितं च सः ।
सानुतापं प्राह "देवा । दुष्कृतं यन्मया कृतम्" ॥ 16

## तृणकणाः*

### 1

त्वां द्रष्टुमेव दत्ताभ्याम् । नेत्राभ्यां दृश्यते परः ।
त्वामर्चितुं प्रदत्ताभ्याम् । हस्ताभ्या मर्च्यते परः ॥ 1

त्वां गातुमेव वीणा मे । भवता देव! शिक्षिता ।
न प्रीणितोऽसि गीतेन । प्रीणिता धनिका मुहुः ॥ 2

भवता प्रदत्तभृत्या । समृद्धिमा, नाप्तबहुभोगः ।
नाहं भवन्तमभजे । वेतनवृध्यै मुहर्मुहुर्याचे ॥ 3

स्थातुं मया समक्षं ते । न शक्य मपराधिना ।
न स्थातुं च परोक्षं ते । क्षाम्येत्कोऽन्योऽपराधिनम् ? 4

### 2

गणयसि न त्वं स्वर्णम् । मणिसञ्चयमप्ययस्कांत !
गाढ मयःखण्डे मे । खिद्यसि; को नु खलु हेतुः स्यात् ? 5

राजतः काञ्चनैः पात्रैः । संपन्नोऽसि मणीमयैः ।
कुतो मृन्मयपात्राय । मम स्पृहयसि प्रभो ! 6

---

*Mistic Poetry.

वैणिकैर्वांशिकैरन्यैः । प्रीण्यसे खलु गायकैः ।
प्रीतिः कुतस्तेऽद्य जाता ? गीते रूक्षे मम प्रभो ! 7

## 3

प्रचलच्छम्पालतिका । प्रग्रहसंयमितवारिवाहाश्वैः ।
व्योमरथेनोढेन । सञ्चरमाणो मया स संदृष्टः ॥ 8

उपविशता सिकतासु । मया नदीशीतलोर्मिकारूपान् ।
स्वकटाक्षान् करुणार्द्रान् । प्रसारयन् वीक्षितो देवः ॥ 9

पिकस्वरश्रुतिं कृत्वा । सर्वान् पल्लवयं स्तरून् ।
गायन् श्राव्यं वसंताख्यम् । गेयं दृष्टः स गायकः ॥ 10

## 4

उदेतीदं कुतो ज्योति ? न कोऽप्यत्रास्ति; नैव च ।
व्योम्नि चन्द्र; स्तारकाश्च । संछन्नाः सांद्रवारिदैः ॥ 11

उदेतीदं कुतो ज्योतिः ? कियन्मे हृदयंगमम् ?
कियन्नेत्रोत्सवं कुर्व ? दपूर्वं मधुरं च यत् ॥ 12

किं कान्तिपुञ्जस्तेऽङ्गस्य ? किं स्मितं ते मनोहरम् ?
भगवं! स्त कृपाक्षीर । सिन्धोर्वा भङ्गसञ्चयः ? 13

## 5

ह्यः सायं चन्द्रकला । नौकारूढः सखे! गायन् ।
गगनधुनीसलिलेषु । विहरन्नास्ते भवान् हि सहमित्रः ॥ 14

अधिरूढो वारिदाश्वम् । रथ्यायां तारकावने ।
वाह्याल्या विहरन् दृष्टो । द्यो रजन्यां भवान् खलु ॥ 15

उदयाद्रौ पौर्णमास्याम् । स्थितेन प्रत्यगङ्गनाम् ।
लक्ष्यीकृत्य सखे! क्षिप्तो । मल्लीगुच्छ स्त्वया खलु ॥ 16

## 6

यतमानः क्लिश्येऽहम् । भवन्तमुपसर्तु मनवधेः कालात् ।
देव ! कथ मुपसरेयम् ? । दिगन्तरेखेव दूरदूरगतम् ॥ 17

## 7

मम नेत्रपुण्डरीके, । मनःकुमुद, मंघ्रिपङ्कजद्वन्द्वम् ।
करकोकनदयुगं च । संग्रथ्य समर्पयामि तव पदयोः ॥ 18

## 8

पुष्पाञ्जले! तवैकैकम् । दूतीभूत्वा शुभं प्रभुम् ।
यातना मम विज्ञाप्य । मां करो त्वमुकम्पितम् ॥ 19

## 9

मम जीवितगाथास्ते । निवेदयाम्येव गामतन्त्रिकया ।
आशंसेऽनेकेषा । मंशामा मुत्तरं देव ! 20

## 10

त्वामेव मत्वा पुत्रं मे । देव! चुम्बामि तन्मुखम् ।
त्वामेव मत्वा श्लिष्यामि । सुन्दरीं मे दिने दिने ॥ 21

## 11

आहूतोऽहं किंकरैस्त्रि । र्नामग्राहं महोच्चकैः ।
गत्वा सभां करौ बध्वा । प्राड्विवाकपुरःस्थितः ॥ 22

बहुधा प्रश्नयन् मां स । वेपमानं भयाद्व्यधात् ।
अपराधे स्थापयित्वा । दण्डं द्वीपांतरस्थितिम् ॥ 23

पतित इव प्रासादा । द्दूर्ते धिक्! पूतिगन्धिनि ।
अपारयन् समारोढु । मेकाक्यस्थां रुदंश्चरन् ॥ 24

दृष्ट्वोत्पततः पतगान् । वात्याधूतांश्च वारिदान् ।
अप्रभुस्तद्गतीः प्राप्तुम् । विषण्णोऽत्र स्थितोऽस्म्यहम् ॥ 25

अविधा! अविधा!! जन्म! न्यस्मिन् भुक्ताघसञ्चयः ।
पुनस्त्वां प्राप्य भो देव! किं भजेय यथापुरम् ॥ 26

## 12

उप्तं पुरा निम्बबीजम् । फलमाम्रस्य लिप्स्यते ।
अह मूर्खः किमून्मत्त ? उपहास्योस्मि सर्वथा ॥ 27

## 13

आगतो देव ! ते सौध । मुच्चैस्त्वामाहृयं मुहुः ।
प्रतिशब्दः श्रुतो नैव । यद्यासीः किं न भाषसे ? 28

## 14

नहि जलजे तव चरणे । मम हृद्भृगस्य चम्पके देव !
न च चन्द्रस्तव वदनम् । मम नेत्रकुवालयोरभूत्सविता ॥ 29

नाभयदस्तव हस्तः । करवालो भयङ्करः ।
न कटाक्षाः शातबाणा । विरुद्धोऽसि प्रभो ! कुतः ? 30

## 15

व्योम प्रणमति मूर्ध्ना । दिशाकरैरुत्थितै र्नमस्यति भूः ।
गिरयोऽभिवादयन्ते । पतिता; स्त्वामेव सागराः स्तुवते॥ 31

## 16

यच्छत सरितः ! पाद्यम् । लतिका ! अर्घ्यं; फलानि भो वृक्षाः !
पतगाः ! स्वागत; माया । त्यद्य कुटीरं ममातिथिर्देवः ॥ 32

## 17

मूलगतं त्वां देव ! वृक्षा मां पल्लवांगुलिभिः ।
जिज्ञापयिषन्तीति । श्रान्तो गत्वाऽस्मि भग्नाशः ॥ 33

# शुद्धपत्रम्

| पृष्ठसंख्या | असाधुः | साधुः |
|---|---|---|
| 1 | निर्भमस्य | निर्मग्नस्य |
| 12 | यावच्छ्रृतं | यावच्छ्रुतं |
| 15 | भूतपूवः | भूतपूर्वः |
| ,, | विषो | बिषम् |
| 19 | सामन्तोऽस्ते | सामन्तोन्ते |
| 20 | कृताथिधेय | कृतातिथेय |
| 23 | नधसः | नभसः |
| 26 | प्रसारण | प्रसारणम् |
| 27 | मुहूतिर्धे | मुहूर्तार्धे |
| 29 | अगच्छत् | अगच्छन् |
| ,, | त्वदाचार्यौ | त्वदाचार्यान् |
| 35 | भ्रान्त्या | भ्रन्त्या |
| 37 | क्रूरसत्व | क्रूरसत्वैः |
| ,, | असू | असूं |
| 39 | इवश्न | इवाश्नं |
| 43 | निर्यान्ताम् | निर्यान्तम् |
| 45 | मवतीर्यं | अवतीर्य |
| 48 | दक्त | दत्त |
| 50 | मभिषेकु | मभिषेक्तुं |
| 52 | जनः | जनैः |
| 54 | सताड्य | सन्ताड्य |
| ,, | नकेषु | नैकेषु |
| 55 | राजतः | राजतैः |